मः । थास्, आथाम्, ध्वम् इति मध्यमः । इट्, वहि, महिङ् इत्युत्तमः । प्रथम-मध्यमोत्तमप्रदेशाः "शेषे प्रथमः" इत्येवमादयः ॥

तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ १०२ ॥

तान्येकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति(१) एकशः एकैकं पदम् । तिबिति एकवचनम् । तसिति द्विवचनम् । झि इति बहुवचनम् । एवं सर्वत्र । एकवचनद्विवचनबहुवचनप्रदेशाः "बहुषु बहुवचनम्" इत्येवमादयः ॥

सुपः ॥ १०३ ॥

तिङां त्रिकेष्वेकवचनादिसंज्ञा विहिताः सम्प्रति सुपां त्रिकेषु विधीयन्ते । सुपश्च त्रीणि त्रीणि पदानि एकश एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति । सु इत्येकवचनम् । औ इति द्विवचनम् । जसिति बहुवचनम् । एवं सर्वत्र ॥

विभक्तिश्च ॥ १०४ ॥

त्रीणित्रीणीत्यनुवर्तते । त्रीणि त्रीणि विभक्तिसंज्ञाश्च भवन्ति सुपस्तिङश्च । विभक्तिप्रदेशाः, "अष्टन आ विभक्तौ" इत्येवमादयः ॥

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ १०५ ॥

लस्येत्यधिकृत्य सामान्येन तिबादयो विहितास्तेषामयं पुरुषनियमः क्रियते । युष्मद्युपपदे सति व्यवहिते चाव्यवहिते सति समानाऽधिकरणे समानाभिधेये तुल्यकारके स्थानिनि प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि मध्यमपुरुषो भवति । त्वं पचसि । युवां पचथः । यूयं पचथ । अप्रयुज्यमानेऽपि । पचसि । पचथः । पचथ ॥

प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १०६ ॥

प्रहासः परिहासः क्रीडा । प्रहासे गम्यमाने मन्योपपदे धातोर्मध्यमपुरुषो भवति, मन्यतेश्चोत्तमः स चैकवद्भवति । एहि मन्ये ओदनं भोक्ष्यस इति, नहि भोक्ष्यसे, भुक्तः सोऽतिथिभिः । एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्तेन ते पिता । मध्यमोत्तमयोः प्राप्तयोः, उत्तममध्यमौ विधीयेते । प्रहास इति किम् । एहि मन्यसे ओदनं भोक्ष्य इति । सुष्ठ मन्यसे, साधु मन्यसे ॥

अस्मद्युत्तमः ॥ १०७ ॥

उत्तमपुरुषो नियम्यते । अस्मद्युपपदे समानाभिधेये प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि उत्तमपुरुषो भवति । अहं पचामि । आवां पचावः । वयं पचामः । अप्रयुज्यमानेऽपि, पचामि । पचावः । पचामः ॥

शेषे प्रथमः ॥ १०८ ॥

शेष इति मध्यमोत्तमविषयादन्य उच्यते । यत्र युष्मदस्मदी समानाधिकरणे

(१) "तानि तिङस्त्रीणि त्रीणि भूत्वैकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति" इत्यपि पाठः ।

उपपदे न स्तः, तत्र शेषे प्रथमपुरुषो भवति। पचति। पचतः।

परः सन्निकर्षः संहिता ॥ १०९ ॥

परशब्दोऽतिशये वर्त्तते। सन्निकर्षः प्रत्यासत्तिः। परो यः सन्निकर्षो व... मात्राकालव्यवधानं स संहितासंज्ञो भवति। दध्यत्र, मद्ध्वत्र। संहि... "संहितायाम्" इत्येवमादयः॥

विरामोऽवसानम् ॥ ११० ॥

विरतिर्विरामः, विरम्यतेऽनेनेति वा विरामः, सोऽवसानसंज्ञो भवति... मुधुँ, वृत्तः, प्लत्तः। अवसानप्रदेशाः "खरवसानयोर्विसर्जनीय" इत्येवमादयः।

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ प्रथमाध्यायस्य चतुर्थः पादः।

समाप्तश्चाध्यायः॥ शुभम्॥

---

अथ द्वितीयाध्यायस्य प्रथमः पादः॥

समर्थः पदविधिः ॥ १ ॥

परिभाषेयम्। यः कश्चिदिह शास्त्रे पदविधिः श्रूयते स समर्थो वे... विधीयत इति विधिः, पदानां विधिः, पदविधिः। स पुनः समासादिः... शक्तः। विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो वेदितव्यः। अथवा स... श्रयत्वात् समर्थः। समर्थानां पदानां सम्बद्धार्थानां संसृष्टार्थानां विधिर्वे... वक्ष्यति—"द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः"। कष्टं श्रितः, क... समर्थग्रहणं किम्? पश्य देवदत्त कष्टं, श्रितो विष्णुमित्रो गुरुकुलम्। "तृतीया तत्कृतार्थेन गुणवचनेन"। शङ्कुलया खण्डः, शङ्कुलाखण्डः। समर्थग्रहणं किम्... करिष्यसि शङ्कुलया, खण्डो देवदत्त उपलेन। "चतुर्थी तदर्थार्थबलिहितसुख..." यूपाय दारु, यूपदारु। समर्थग्रहणं किम्? गच्छ त्वं यूपाय, दारु देवदत्त... "पञ्चमी भयेन"। वृकेभ्यो भयं, वृकभयम्। समर्थग्रहणं किम्? रक्ष त्वं मा... भयं देवदत्तस्य यज्ञदत्तात्। "षष्ठी"। राज्ञः पुरुषो, राजपुरुषः। समर्थग्रह... भार्या राज्ञः, पुरुषो देवदत्तस्य। "सप्तमी शौण्डैः"। अक्षेषु शौण्डः, अ... समर्थग्रहणं किम्? शक्तस्त्वमक्षेषु, शौण्डः पिबति पानागारे। पदग्रहणं किम्... विधौ समर्थ परिभाषा मा भूत्। तिष्ठतु दध्यशान त्वं शाकेन। तिष्ठतु कु..., हर देवदत्तात्। यणादेशो नित्यश्च तुग्भवति॥

सुबामन्त्रिते पराङ्गवत् स्वरे ॥ २ ॥

सुबन्तमामन्त्रिते परतः परस्याङ्गवद्भवति, स्वरे, स्वरलक्षणे कर्त्तव्ये।

ऽयम् । सुबन्तमामन्त्रितमनुप्रविशति । वक्ष्यति—"आमन्त्रितस्य च" । आम-
स्यादिरुदात्तो भवति । स ससुप्कस्यापि यथा स्यात् । कुण्डेनाटन् । परशुना
। मद्राणां राजन् । कश्मीराणां राजन् । सुबिति किम् ? पीड्ये पीड्यमान ।
न्त्रित इति किम् ? गेहे गार्ग्यः । परग्रहणं किम् ? पूर्वस्य मा भूत् । देवदत्त कुण्डे-
। अङ्गग्रहणं किम् ? यथा मृत्पिण्डीभूतः स्वरं लभेत । उभयोराद्युदात्तत्वं मा
वत्करणं किम् ? स्वाश्रयमपि यथा स्यात् । आं कुण्डेनाटन् । "आम एकान्तर-
न्त्रितमनन्तिके" इत्येकान्तरता भवति । स्वर इति किम् ? कूपे सिञ्चन् । चर्म
। षत्वणत्वे प्रति पराङ्गवन्न भवति । ॐसुबन्तस्य पराङ्गवद्भावे समानाधिकरण-
संख्यानमनन्तरत्वात्ॐ । (१) तीक्ष्णया सूच्या सीव्यन् । तीक्ष्णेन परशुना वृश्चन् ।
यानां प्रतिषेधो वक्तव्यःॐ । उच्चैरधीयान । नीचैरधीयान ॥

प्राक्कडारात् समासः ॥ ३ ॥

डारसंशब्दनात् प्राग् (२)यानित ऊर्ध्वमनुक्रमिष्यामस्ते समाससंज्ञा वेदित-
वक्ष्यति । "यथाऽसादृश्ये" । यथावृद्धं ब्राह्मणानामन्त्रयस्व । प्राग्वचनं संज्ञा-
शार्थम् । समासप्रदेशाः "तृतीयासमास" इत्येवमादयः ॥

सह सुपा ॥ ४ ॥

बिति वर्तते । सहेति सुपेति च त्रयमप्यधिकृतं वेदितव्यम् । यदित ऊर्ध्वमनु-
ामस्तत्रेदमुपस्थितं द्रष्टव्यम् । वक्ष्यति—"द्वितीया श्रिते"ति । द्वितीयान्तं
द्भिः सह समस्यते । कष्टं श्रितः, कष्टश्रितः । सहग्रहणं योगविभागार्थं तिङापि
था स्यात् । अनुव्यचलत् । अनुप्रावर्षत् ॥

अव्ययीभावः ॥ ५ ॥

व्ययीभाव इत्यधिकारो वेदितव्यः । यानित ऊर्ध्वमनुक्रमिष्यामोऽव्ययीभावसं-
वेदितव्याः । वक्ष्यति—"यथाऽसादृश्ये" । यथावृद्धं ब्राह्मणानामन्त्रयस्व । अ-
ा चेयं महती पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयति । अव्ययीभावप्रदेशा
ीभावश्च" इत्येवमादयः ॥ विभज्यते आदिपदार्थः अनया

ऽव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भाव-
पश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ॥ ६ ॥

सुपेति च वर्तते । विभक्त्यादिष्वर्थेषु यदव्ययं वर्तते तत्समर्थेन सुबन्तेन सह
, अव्ययीभावश्च समासो भवति । वचनग्रहणं प्रत्येकं संबध्यते । विभक्तिवचने

---

सुबन्तस्य पराङ्गवद्भावे कर्तव्ये तत्समानाधिकरणस्योपसंख्यानम्ॐ । अनन्तरत्वात्
न प्राप्नोतीति क्वचित्पाठान्तरम् । (२) "अधिकारोऽयम्, "कडाराः कर्मधारये"
ति वक्ष्यति प्रागेतस्मात्" इति पाठान्तरम् ।

तावत्—स्त्रीस्वधिकृत्य कथा प्रवर्त्तते। अधिस्त्रि, अधिकुमारि। सप्तम्यर्थे यद्व भक्तिवचनम्। समीपवचने—कुम्भस्य समीपम्, उपकुम्भम्, उपमणि ऋद्धेराधिक्यम्, समृद्धिर्मद्राणाम्—सुमद्रं, सुमुद्रं, सुमगन्धं वर्त्तते। भावः। गवदिकानामृद्धेरभावः—दुर्गवदिकं, दुर्यवनं वर्त्तते। अर्थाभावो अभावो मक्षिकाणाम्—निर्मक्षिकं, निर्मशकं वर्त्तते। अत्ययो भूतत्वमति तानि हिमानि—निर्हिमं निःशीतं, वर्त्तते।

असंप्रति उपभोगस्य वर्त्तमानकालप्रतिषेधः। अतितैसृकम्(१)। दनं, तस्यायमुपभोगकालो न भवतीत्यर्थः। शब्दप्रादुर्भावः प्रकाशता इतिपाणिनि। तत्पाणिनि। पाणिनिशब्दो लोके प्रकाशत इत्यर्थः। पादातम्। रथानां पश्चात्। यथार्थे यदव्ययं वर्त्तते तत्समस्यते। यो पदार्थानतिवृत्तिः सादृश्यं चेति यथार्थाः। योग्यतायाम्—अनुरूपम्। तीत्यर्थः। वीप्सायाम्—अर्थमर्थं प्रति, प्रत्यर्थम्। पदार्थानतिवृत्तौ आनुपूर्व्यमनुक्रमः। अनुज्येष्ठं प्रविशन्तु भवन्तः। ज्येष्ठानुपूर्व्या भवन्तः त्यर्थः। यौगपद्यमेककालता। सचक्रं धेहि। युगपच्चक्रं धेहीत्यर्थः। सा किमर्थमिदमुच्यते, यथार्थ इत्येव सिद्धम्। गुणभूतेऽपि सादृश्ये यथा स सख्या ससखि। संपत्तिरनुरूप आत्मभावः समृद्धेरन्यः। सब्रह्म बाभ्रवा शालङ्कायनानाम्। साकल्यमशेषता। सतृणमभ्यवहरति। सतुसम्। न हार्यं परित्यजतीत्ययमर्थोऽधिकार्थवचनेन प्रतिपाद्यते। अन्तवचने। अ ग्रहापेक्षया समाप्तिरुच्यते। साग्न्यधीते। सेष्टिपशुबन्धम्। पशुब इत्यर्थः। इयं समाप्तिरसकलेऽप्यध्ययने भवतीति साकल्यात्पृथगुच्यते।

यथाऽसादृश्ये ॥ ७ ॥

यथेत्येतदव्ययमसादृश्ये वर्त्तमानं सुपा सह समस्यते, अव्ययीभा भवति। यथावृद्धं ब्राह्मणानामन्त्रयस्व। ये ये वृद्धाः यथावृद्धम्। य असादृश्य इति किम्? यथा देवदत्तस्तथा यज्ञदत्तः। यथार्थे यदव्यय सिद्धे समासे वचनमिदं सादृश्यप्रतिषेधार्थम् ॥

यावदवधारणे ॥ ८ ॥

यावदित्येतदव्ययमवधारणे वर्त्तमानं सुपा सह समस्यते, अव्ययीभा भवति। (२)अवधारणमियत्तापरिच्छेदः। यावदमत्रं ब्राह्मणानामन्त्र मत्राणि सम्भवन्ति पञ्च षड् वा तावत आमन्त्रयस्व। अवधारण इति तावद्भुक्तम्। नावधारयामि कियन्मया भुक्तमिति(३)॥

---

(१) "तैष्टकम्'' इति पाठः। (२) 'अवधारणम्' इति—इयतो भाव तस्याः परिच्छेदो निश्चयः। (३) "कियद्दत्तं त्वया कियद्भुक्तं मया"

सुप्प्रतिना मात्रार्थे ॥ ९ ॥

मात्रा बिन्दुः स्तोकमल्पमिति पर्यायाः। मात्रार्थे वर्त्तमानेन प्रतिना सह सुवन्तं स्यते, अव्ययीभावश्च समासो भवति। अस्त्यत्र किञ्चित् शाकम्(१), शाकप्रति। प्रति। मात्रार्थे इति किम्? वृत्तं प्रति विद्योतते विद्युत्। सुबिति वर्तमाने पुनः ग्रहणमव्ययनिवृत्त्यर्थम् ॥

अक्षशलाकासंख्याः परिणा ॥ १० ॥

(२)अक्षशब्दः शलाकाशब्दः संख्याशब्दश्च परिणा सह समस्यन्ते, अव्ययीभावश्च समासो भवति। कितवव्यवहारे समासोऽयमिष्यते। पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति, तत्र यदा सर्वे उत्तानाः पतन्त्यवाञ्चो वा तदा पातयिता जयस्यैवास्य विघातोऽन्यथा (३) पाते सति जायते। अक्षेणेदं न तथा वृत्तं यथा पूर्वे, अक्षपरि शलाकापरि। एकपरि। द्विपरि। त्रिपरि। परमेण(४) चतुष्परि। त्वेक(५)रूपासु जय एव भविष्यति।

अक्षाद्यस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत्।
कितवव्यवहारे च एकत्वेऽक्षशलाकयोः ॥

विभाषा ॥ ११ ॥

आपेत्ययमधिकारो वेदितव्यः। यदित ऊर्ध्वमनुक्रमिष्यामस्तद्विभाषा भवति। —"अपपरिवहिरञ्चवः पञ्चम्या"। अपत्रिगर्तं वृष्टो देवः। अप त्रिगर्तेभ्यः ॥

अपपरिवहिरञ्चवः पञ्चम्या ॥ १२ ॥

अप परि वहिस् अञ्चु इत्येते सुबन्ताः पञ्चम्यन्तेन सह विभाषा समस्यन्ते, अव्ययीभावश्च समासो भवति। अपत्रिगर्त्तं वृष्टो देवः। अप त्रिगर्त्तेभ्यः। परित्रिगर्त्तम्, परि त्रिगर्त्तेभ्यः। वहिर्ग्रामम्, वहिर्ग्रामात्। प्राग्ग्रामम्, प्राग् ग्रामात्। वहिः शब्दयोगे पञ्चमी भावस्यैतदेव ज्ञापकम् ॥

आङ्मर्यादाभिविध्योः ॥ १३ ॥

आङित्येतन्मर्यादायामभिविधौ च वर्त्तमानं पञ्चम्यन्तेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। आपाटलिपुत्रं वृष्टो देवः, आ पाटलिपुत्रात्। अभिविधौ—आकुमारं यशः पाणिनेः, आ कुमारेभ्यः ॥

लक्षणेनाभिप्रती आभिमुख्ये ॥ १४ ॥

लक्षणं चिह्नं, तद्वाचिना सुबन्तेन सहाभिप्रती शब्दावाभिमुख्ये वर्त्तमानौ विभाषा समस्येते, अव्ययीभावश्च समासो भवति। अभ्यग्निशलभाः पतन्ति, अग्निमभि।

(१) अत्र 'सूप' इति पदमंजर्याम्। (२) अक्षशलाकासंख्याशब्दा इति पदमंजर्याम् पाठः। (३) विघातः—पराजयः। कचित् 'विपात' इति पाठः। तत्रापि स एवार्थः। (४) अतिशयेनेत्यर्थः। (५) "एकरूपेषु" इति पाठान्तरम्।

प्रत्यग्नि, अग्निं प्रति। अग्निं लक्ष्यीकृत्य अभिमुखं पतन्तीत्यर्थः। लक्ष्यणे स्रुघ्नं प्रति गतः। प्रतिनिवृत्य स्रुघ्नमेवाभिमुखं गतः। अभिप्रती इति किम् स्तेन गतः। आभिमुख्य इति किम्? अभ्यङ्का गावः, प्रत्यङ्का गावः। नवा

अनुर्यत्समया॥ १५॥

समया समीपम्। अनुर्यस्य(१)समीपवाची तेन लक्षणभूतेन सह स्यते, अव्ययीभावश्च समासो भवति। अनुवनमशनिर्गतः। अनुरिति समया। यत्समयेति किम्? वृक्षमनु विद्योतते विद्युत्। "अव्ययं विभक्तिस सिद्धे पुनर्वचनं विभाषार्थम्॥

यस्य चायामः॥ १६॥

लक्षणेनेति वर्तते। आयामो दैर्घ्यम्। अनुर्यस्यायामवाची तेन लक्ष विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुगङ्गं वाराणसी, मथुरा। यमुनाऽऽयामेन मथुराऽऽयामो लक्ष्यते। आयाम इति किम्? वृ तते विद्युत्॥

तिष्ठद्गुप्रभृतीनि च॥ १७॥

तिष्ठद्ग्वादयः समुदाया एव निपात्यन्ते। तिष्ठद्गुप्रभृतीनि शब्द यीभावसंज्ञानि भवन्ति। तिष्ठद्गु कालविशेषः। तिष्ठन्ति गावो यस्मिन् का स तिष्ठद्गु कालः। खलेयवादीनि प्रथमान्तानि विभक्त्यन्तरेण नैव सम्ब पदार्थे च काले वर्तन्ते। चकारोऽवधारणार्थः। अपरः समासो न भवति द्ग्विति। तिष्ठद्गु। वहद्गु। आयतीगवम्। खलेबुसम्। खलेयवम्। लूयमानयवम्। पूतयवम्। पूयमानयवम्। संहृतयवम्। संह्रियमाणयव बुसम्। संह्रियमाणबुसम्। एते कालशब्दाः। (२)समभूमि। समपदाति। विषमम्। निष्षमम्। दुष्षमम्। अपसमम्। आयतीसमम्। प्राह्णम्। प्र गम्। प्रदक्षिणम्। अपरदक्षिणम्। सम्प्रति। असम्प्रति। पापसमम्। इच् कर्मव्यतिहारे (ग० सू०)। दण्डादण्डि। मुसलामुसलि॥

पारे मध्ये षष्ठ्या वा॥ १८॥

षष्ठीसमासे प्राप्ते तदपवादोऽव्ययीभाव आरभ्यते। वावचनाच्च षष्ठी पक्षेऽभ्यनुज्ञायते। पारमध्यशब्दौ षष्ठ्यन्तेन सह विभाषा समस्येते, समासो भवति। तत्सन्नियोगेन चानयोरेकारान्तत्वं निपात्यते। पारं गङ्गम्। मध्यं गङ्गायाः, मध्येगङ्गम्। षष्ठीसमासपक्षे, गङ्गापारम्। गङ्गाम विभाषया वाक्यविकल्पः क्रियते॥

(१) अत्र "यत्समया, समयावाची" इति पदमञ्जर्यां पाठः। (२) समंभूमि, संभूमि संपदाति, इति पा०।

संख्या वंश्येन ॥ १९ ॥

विद्यया जन्मना वा प्राणिनामेकलक्षण(१)सन्तानो वंश इत्यभिधीयते । तत्र भवो यः । तद्वाचिना सुबन्तेन सह संख्या समस्यते, अव्ययीभावश्च समासो भवति । मुनी व्याकरणस्य वंश्यौ, द्विमुनि व्याकरणस्य । त्रिमुनि व्याकरणस्य । यदा तु यया तद्वतामभेदविवक्षा तदा सामानाधिकरण्यं भवति । द्विमुनि व्याकरणं, त्रिमुनि करणमिति । जन्मना—एकविंशति भारद्वाजम् ॥

नदीभिश्च ॥ २० ॥

संख्येत्यनुवर्त्तते । नदीवचनैः शब्दैः सह संख्या समस्यते, अव्ययीभावश्च समासो वति । समाहारे चायमिष्यते । सप्तगङ्गम्, द्वियमुनम्, पञ्चनदम्, सप्तगोदावरम् ॥

अन्यपदार्थे च संज्ञायाम् ॥ २१ ॥

संख्येति निवृत्तं, नदीग्रहणमनुवर्त्तते । नदीभिः सह सुबन्तमन्यपदार्थे वर्त्तमानं ज्ञायां विषये समस्यते, अव्ययीभावश्च समासो भवति । विभाषाधिकारेऽपि नित्य-मास एवायम् । नहि वाक्येन संज्ञा गम्यते । उन्मत्तगङ्गं नाम देशः, लोहितगङ्गम्, ष्णगङ्गम्, शनैर्गङ्गम् । अन्यपदार्थ इति किम् ? कृष्णवेण्णा । संज्ञायामिति किम् ? ीघ्रगङ्गो देशः ॥

तत्पुरुषः ॥ २२ ॥

तत्पुरुष इति संज्ञाऽधिक्रियते प्राग्बहुव्रीहेः, यानित ऊर्ध्वमनुक्रमिष्यामस्तत्पुरुष-ज्ञास्ते वेदितव्याः । वक्ष्यति, "द्वितीयाश्रितातीतपतित" इति । कष्टश्रितः । पूर्वाचा-संज्ञा चेयं महती, तदङ्गीकरणमुपाधेरपि तदीयस्य परिग्रहार्थम् । उत्तरपदार्थप्रधान-त्पुरुष इति । तत्पुरुषप्रदेशाः "तत्पुरुषे कृति बहुलम्" इत्येवमादयः ॥

द्विगुश्च ॥ २३ ॥

द्विगुश्च समासस्तत्पुरुषसंज्ञो भवति । द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजनम् । ञ्चराजम्,(२) दशराजम् । द्व्यहः, त्र्यहः, पञ्चगवम्, दशगवम् ॥

द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २४ ॥

सुप् सुपेति वर्त्तते, तस्य विशेषणमेतद् द्वितीया । द्वितीयान्तं सुबन्तं श्रितादिभिः ह समस्यते, तत्पुरुषश्च समासो भवति । कष्टं श्रितः, कष्टश्रितः । नरकश्रितः । अतीत-कान्तारमतीतः, कान्तारातीतः । पतित—नरकं पतितः, नरकपतितः । गत—ग्रामं तः, ग्रामगतः । अत्यस्त—तरङ्गानत्यस्तः, तरङ्गात्यस्तः । तुहिनात्यस्तः । प्राप्त—सुखं

---

(१) एकलक्षणः एकस्वभावः । सन्तानः प्रबन्धः । सन्तानिनामेकलक्षणत्वात् सन्तानानामेकलक्षणत्वम् । (२) यद्यप्यत्र 'पञ्चराजी' 'दशराजी' इति मुद्रितपुस्तकेषु पाठः उपलभ्यते व्याख्यातश्चैष पाठो न्यासे तथापि भाष्यपदमञ्जर्यनुरोधात् परिवर्तित । पदमञ्जर्यामस्य पाठस्य अपपाठत्वं स्पष्टमेवोक्तम् ।

प्राप्तः, सुखप्राप्तः । आपन्न–सुखमापन्नः, सुखापन्नः । दुःखापन्नः ॥ ॐश्रिताद्धि गम्यादीनामुपसंख्यानम्ॐ । ग्रामं गमी, ग्रामगमी । ग्रामं गामी, ग्रामगामी । बुभुक्षुः, ओदनबुभुक्षुः ॥

स्वयं क्तेन ॥ २५ ॥

स्वयमेतदव्ययमात्मनेत्यस्यार्थे वर्त्तते । तस्य द्वितीयया(१)सम्बन्धोऽनुपप द्वितीयाग्रहणमुत्तरार्थमनुवर्त्तते । स्वयमित्येतत्सुवन्तं क्तान्तेन सह समस्यते, षश्च समासो भवति । स्वयन्धौतौ पादौ । स्वयंविलीनमाज्यम् । ऐकपद्यमैं समासत्वाद्भवति ॥

खट्वा क्षेपे ॥ २६ ॥

खट्वाशब्दो द्वितीयान्तः क्तान्तेन सह क्षेपे गम्यमाने समस्यते, तत्पुरुष सो भवति । क्षेपो निन्दा स च समासार्थ एव, तेन विभाषाधिकारेऽपि नि एवायं, नहि वाक्येन क्षेपो गम्यते । खट्वारोहणं चेह विमार्गप्रस्थानस्योपल सर्व एवाविनीतः खट्वारुढ इत्युच्यते । खट्वारूढो जाल्मः, खट्वाप्लुतः । स्थित इत्यर्थः । क्षेप इति किम् ? खट्वामारूढः ॥

सामि ॥ २७ ॥

सामीत्येतदव्ययमर्द्धशब्दपर्यायस्तस्यासत्त्ववाचित्वात् द्वितीयया नास्ति स तत् सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । सामिकृतम्, पीतम्, सामिभुक्तम् । ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति ॥

कालाः ॥ २८ ॥

द्वितीया, क्तेनेति वर्त्तते । कालवाचिनः शब्दा द्वितीयान्ताः क्तान्तेन स स्यन्ते विभाषा, तत्पुरुषश्च समासो भवति । अनत्यन्तसंयोगार्थं वचनम् । का न स्वरूपविधिः । षण्मुहूर्त्ताश्चराचराः । ते कदा (२)चिदहर्गच्छन्ति कदा चि अहरतिसृता मुहूर्त्ताः । अहस्संक्रान्ताः । रात्र्यतिसृता मुहूर्त्ताः । रात्रिसंक्रान्ताः । प्रमितश्चन्द्रमाः । मासं प्रमातुमारब्धः प्रतिपच्चन्द्रमा इत्यर्थः ॥

अत्यन्तसंयोगे च ॥ २९ ॥

काला इति वर्त्तते, क्तेनेति निवृत्तम् । अत्यन्तसंयोगः कृत्स्नसंयोगः । स्वेन सम्बन्धिना व्याप्तिः । कालवाचिनः शब्दा द्वितीयान्ता अत्यन्तसंयोगे सुपा सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति । मुहूर्त्तं सुखम्, खम्, सर्वरात्रकल्याणी, सर्वरात्रशोभना ॥

---

(१) 'सह सम्बन्धो नोपपद्यते' इति न्यासे पाठः । (२) कदाचिदहः—उत्त कदाचिद्रात्रि–दक्षिणायने ।

तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३० ॥

सुप्सुपेति वर्त्तते, तस्य विशेषणमे(१)तत् तृतीया। तृतीयान्तं सुबन्तं गुणवच-
ाऽर्थशब्देन च सह समस्यते, तत्पुरुषश्च समासो भवति। कीदृशेन गुणवचनेन ?
कृतेन, तदर्थकृतेन तृतीयान्तार्थकृतेनेति यावत्। शङ्कुलया खण्डः, शङ्कुलाखण्डः।
रेणा काणः, किरिकाणः। अर्थशब्देन–धान्येनार्थः, धान्यार्थः। तत्कृतेनेति किम्,
णा काणः। गुणवचनेनेति किम् ? गोभिर्वपावान्(२) ॥

पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ ३१ ॥

पूर्व सदृश सम ऊनार्थ कलह निपुण मिश्र श्लक्ष्ण एतैः सह तृतीयान्तं समस्यते,
ुरुषश्च समासो भवति। अस्मादेव वचनात् पूर्वादिभिर्योगे तृतीया भवति, हेतौ
द्रष्टव्या। पूर्व–मासेन पूर्वः, मासपूर्वः। संवत्सरपूर्वः। सदृश–मातृसदृशः, पितृसदृशः।
–मातृसमः, पितृसमः। ऊनार्थ–माषोनम्, कार्षापणोनम्, माषविकलम्, कार्षापण-
कलम्। कलह–असिकलहः, वाक्कलहः। निपुण–वाग्निपुणः, आचारनिपुणः।
–गुडमिश्रः, तिलमिश्रः। श्लक्ष्ण–आचारश्लक्ष्णः ॥ ॐपूर्वादिष्ववरस्योपसंख्या-
ॐ। मासेनावरः, मासावरः। संवत्सरावरः ॥

कर्तृकरणे कृता बहुलम् ॥ ३२ ॥

तृतीयेति वर्त्तते। कर्त्तरि करणे च या तृतीया तदन्तं कृदन्तेन सह समस्यते बहुलं,
ुरुषश्च समासो भवति। (३)सर्वोपाधिव्यभिचारार्थं बहुलग्रहणम्। कर्तरि–अहिना
, अहिहतः। करणे–नखैर्निर्भिन्नो, नखनिर्भिन्नः। परशुना छिन्नः, परशुच्छिन्नः।
करणे इति किम् ? भिक्षाभिरुषितः। बहुलग्रहणं किम् ? दात्रेण लूनवान्, परशुना
वान्। इह समासो न भवति। पादहारको, गलेचोपक, इति च भवति ॥

कृत्यैरधिकार्थवचने ॥ ३३ ॥

(४)स्तुतिनिन्दाप्रयुक्तमध्यारोपितार्थवचनमधिकार्थवचनम्। कर्तृकरणयोर्या
या तदन्तं सुबन्तं कृत्यैः सह समस्यतेऽधिकार्थवचने गम्यमाने विभाषा, तत्पुरु-
समासो भवति। कर्त्ता–काकपेया नदी, श्वलेह्यः कूपः। करणम्–बाष्पच्छेद्यानि
नि, कण्टकसंचेय ओदनः। पूर्वस्यैवायं प्रपञ्चः ॥ ॐकृत्यग्रहणे यण्यतोर्ग्रहणं
व्यम्ॐ। इह मा भूत्। काकैः पातव्या इति ॥

---

(१) अत्र मुद्रितपुस्तकेषु 'तृतीया' इति पाठो नोपलभ्यते तथाप्यौचित्यादुपन्यस्तम्। एवं चतुर्थी तदर्थादिष्वपि बोध्यम्। (२) वपावान्—पीवरः। (३) सर्वोपाधीति—अव्याप्त्यतिव्याप्तिपरिहारार्थमित्यर्थः। (४) स्तुतिनिन्दाप्रयुक्तमिति—स्तुत्या निन्दया वा यत्प्रयुक्तं प्रवर्त्तितं तत्स्तुतिनिन्दाप्रयुक्तम्। तदर्थमुच्चारितमित्यर्थः। अध्यारोपितार्थवचनमिति—अध्यारोपितोऽर्थोऽसन्नेव बुद्ध्या समारोपितस्तस्य वचनम्।

अन्नेन व्यञ्जनम् ॥ ३४ ॥

तृतीयेत्ति वर्त्तते । व्यञ्जनवाचि तृतीयान्तमन्नवाचिना सुबन्तेन सह विभाषा, तत्पुरुषश्च समासो भवति । संस्कार्यमन्नं, संस्कारकं व्यञ्जनम् । द सिक्त ओदनः, दध्योदनः। क्षीरौदनः । वृत्तौ क्रियाया अन्तर्भावादन्नव्यञ्जनयोः

भक्ष्येण मिश्रीकरणम् ॥ ३५ ॥

मिश्रीकरणवाचि तृतीयान्तं भक्ष्यवाचिना सुबन्तेन समस्यते, तत्पुरुष भवति । (१)खरविशदमभ्यवहार्यं भक्ष्यं, तस्य संस्कारकं मिश्रीकरणम् । गुडे धानाः, गुडधानाः। गुडपृथुकाः । वृत्तौ क्रियाया अन्तर्भावात्पूर्वोत्तरपदयोः सा

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ ३६ ॥

सुप् सुपेति वर्त्तते, तस्य विशेषणमेतच्चतुर्थी । तदिति सर्वनाम्ना चतुर्थ्यन् परामृश्यते । तस्मै इदं तदर्थम् । तदर्थ अर्थ वलि हित सुख रक्षित इत्येतैः र्थ्यन्तं समस्यते, तत्पुरुषश्च समासो भवति । तदर्थेन प्रकृतिविकारभावे स ष्यते। यूपाय दारु, यूपदारु।कुण्डलाय हिरण्यम्, कुण्डलहिरण्यम् । इह र रन्धनाय स्थाली, अवहननायोलूखलमिति । चतुर्थी चास्मादेव ज्ञापक भवति ॥ ❀अर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्या❀ । ब्राह्मणार्थ प णार्था यवागूः । वलि–कुबेराय वलिः, कुबेरबलिः । महाराजबलिः । हित– अश्वहितम् । सुख–गोसुखम्, अश्वसुखम् । रक्षित–गोरक्षितम्, अश्वरक्षित

पञ्चमी भयेन ॥ ३७ ॥

सुप् सुपेति वर्त्तते, तस्य विशेषणमेतत् पंचमी । पञ्चम्यन्तं सुबन्तं भय सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति । वृकेभ्यो भय यम् । चौरभयम्, दस्युभयम् ॥ ❀भयभीतभीतिभीभिरिति वक्तव्यम्❀ । भीतः वृकभीतः । वृकभीतिः, वृकभीः । पूर्वस्यैवायं बहुलग्रहणस्य प्रपञ्चः । ग्रामनिर्गतः, अधर्मजुगुप्सुरित्येवमादि सिद्धं भवति ॥

अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥ ३८ ॥

अपेत अपोढ मुक्त पतित अपत्रस्त इत्येतैः सह पञ्चम्यन्तं समस्यते, समासो भवति । अपेत–सुखापेतः । अपोढ–कल्पनापोढः । मुक्त–चक्रमुक्तः । स्वर्गपतितः । अपत्रस्त–तरङ्गापत्रस्तः । अल्पश इति समासस्याल्पविषय अल्पा (२) पञ्चमी समस्यते न सर्वा । प्रासादात्पतितः, भोजनादपत्रस्त इ न भवति । "कर्तृकरणे कृता बहुलम्" इत्यस्यैवायं प्रपञ्चः ॥

(१) खरविशदमिति—खरं कठिनं, विशदं विभक्तावयवं, खरं च तद्विशदं दन्तचलनेनादनीयमित्यर्थः। (२) अल्पापंचमीति । अल्पाभ्यः प्रकृतिभ्य

### स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥ ३९ ॥

स्तोक अन्तिक दूर इत्येवमर्थाः शब्दाः कृच्छ्रशब्दश्च पञ्चम्यन्ताः क्तान्तेन सह मस्यन्ते, तत्पुरुषश्च समासो भवति । स्तोक—स्तोकान्मुक्तः । अन्तिक—अन्तिकादा-तः, अभ्याशादागतः । दूरादागतः, विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः, कृच्छ्राल्लब्धः । ञ्चम्याः स्तोकादिभ्य इत्यलुक् ॐशतसहस्रौ परेणेति वक्तव्यम्ॐ । शतात्परे, परश्श-ाः । सहस्रात्परे, परस्सहस्राः । राजदन्तादित्वात्परनिपातः । निपातनात्सुडागमः ॥

### सप्तमी शौण्डैः ॥ ४० ॥

सप्तम्यन्तं शौण्डादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति । अक्षेषु शौण्डो-क्षशौण्डः, अक्षधूर्त्तः, अक्षकितवः । शौण्ड । धूर्त्त । कितव । व्याड । प्रवीण । संवीत । न्तर् । अन्तश्शब्दस्त्वत्राधिकरणप्रधान एव पठ्यते । अधिपटु । पण्डित । कुशल । पल । निपुण(१) । वृत्तौ प्रसक्तिक्रियाया अन्तर्भावादक्षादिषु अधिकरणे सप्तमी ॥

### सिद्धशुष्कपक्वबन्धैश्च ॥ ४१ ॥

सप्तमीति वर्त्तते । सिद्ध शुष्क पक्व बन्ध इत्येतैः सह सप्तम्यन्तं समस्यते, तत्पुरु-श्च समासो भवति । (२) सांकाश्यसिद्धः, काम्पिल्यसिद्धः । शुष्क—आतपशुष्कः, छाया-ष्कः । पक्व—स्थालीपक्वः, कुम्भीपक्वः । बन्ध—चक्रबन्धः । बहुलग्रहणस्यैवायमुदा-रणप्रपञ्चः ॥

### ध्वाङ्क्षेण क्षेपे ॥ ४२ ॥

ध्वाङ्क्षेणेत्यर्थग्रहणम् । ध्वाङ्क्षवाचिना सह सप्तम्यन्तं सुबन्तं समस्यते, तत्पुरु-श्च समासो भवति, क्षेपे गम्यमाने । तीर्थे ध्वाङ्क्ष इव, तीर्थध्वाङ्क्षः । अनवस्थित त्यर्थः । तीर्थकाकः, तीर्थवायसः । क्षेप इति किम् ? तीर्थे ध्वाङ्क्षस्तिष्ठति ॥

### कृत्यैर्ऋणे ॥ ४३ ॥

सप्तमीति वर्त्तते । कृत्यप्रत्ययान्तैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो वति, ऋणे गम्यमाने । यत् प्रत्ययेनैवेष्यते(३) । मासे देयमृणं मासदेयम् । संवत्स-देयम्, त्र्यहदेयम् । ऋणग्रहणं(४)नियोगोपलक्षणार्थं तेनेहापि समासो भवति । पूर्वाह्णे यं साम, प्रातरध्येयोऽनुवाकः । ऋण इति किम् । मासे देया भिक्षा ॥

### संज्ञायाम् ॥ ४४ ॥

संज्ञायां विषये सप्तम्यन्तं सुपा सह समस्यते, तत्पुरुषश्च समासो भवति । संज्ञा मुदायोपाधिः । तेन नित्यसमास एवायं, नहि वाक्येन संज्ञा गम्यते । अरण्येतिल-

(१) संव्याड, मन्थ, समीर, एते शब्दा अपि क्वचिद्दृश्यन्ते । (२) सांकाश्य इति । सैंकाशेन निर्वृत्तं वनं साङ्काश्यम् । कम्पिलेन निर्वृत्तं वनं काम्पिल्यम् । तत्र तपसा सिद्ध इत्यर्थः । (३) यत् प्रत्ययान्तेनैवेति पदमंजर्याम् । यत्प्रत्ययान्तेनैव समास इति न्यासे पाठः । (४) नियोगोऽवश्यंभावः ।

काः, अरण्येमाषाः, वनेकिंशुकाः, वनेबिल्वकाः, कूपेपिशाचकाः। "हलदन्तात् सप्तम्याः संज्ञायाम्" इत्यलुक्॥

क्तेनाहोरात्रावयवाः ॥ ४५ ॥

अहरवयवा रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूर्वाह्णकृतम्, अपराह्णकृतम्। पूर्वरात्रकृतम्, अपररात्रकृतम्। अवयवग्रहणं किम्(१) अहनि भुक्तम्, रात्रौ वृत्तम्। बहुलग्रहणाद् रात्रिवृत्तम्, सन्ध्या... मित्यादयः॥

तत्र ॥ ४६ ॥

तत्रेत्येतत् सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। ... भुक्तम्, तत्रकृतम्, तत्रपीतम्। ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति॥

क्षेपे ॥ ४७ ॥

क्षेपो निन्दा। क्षेपे गम्यमाने सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। अवतप्तेनकुलस्थितं तवैतत्। चापलमेतत्, अनवस्थितत्वं तवैतदि... उदकेविशीर्णम्, प्रवाहेमूत्रितम्, भस्मनिहुतम्। निष्फलं यत्क्रियते तदेवमुच्यते। "तत्पुरुषे कृति बहुलम्" इत्यलुक्॥

पात्रेसंमितादयश्च ॥ ४८ ॥

समुदाया एव निपात्यन्ते। पात्रेसंमितादयः शब्दास्तत्पुरुषसञ्ज्ञा भवन्ति ... गम्यमाने। ये चात्र क्तान्तेन सह समस्तास्तेषां पूर्वेणैव सिद्धे पुनः पाठो युक्तारो... परिग्रहार्थः। पूर्वपदाद्युदात्तत्वं यथा स्यादिति। युक्तारोह्यादिषु हि पात्रेसंमितादयः पठ्यन्ते। पात्रेसंमिताः। पात्रेबहुलाः। अवधारणेन क्षेपो गम्यते। पात्र एव सं... न पुनः क्वचित्कार्य इति। उदुम्बरमशकादिषु उपमया क्षेपः। मातरिपुरुष... प्रतिषिद्धसेवनेन। पिण्डीशूरादिषु निरीहतया। अव्यक्तत्वाच्चाकृतिगणोऽयम्(२) पात्रेसंमिताः, पात्रेबहुलाः(३), उदरक्रिमिः, कूपकच्छपः, कूपचूर्णकः, अवट... कूपमण्डूकः, कुम्भमण्डूकः, उदपानमण्डूकः, नगरकाकः, नगरवायसः, मातरि... पिण्डीशूरः, गेहेशूरः, गेहेनर्दी, गेहेक्ष्वेडी, गेहेविजिती, गेहेव्याडः, गेहेदृप्तः, गे... गर्भेतृप्तः, आखनिकवकः, गोष्ठेशूरः गोष्ठेविजिती, गोष्ठेक्ष्वेडी, गेहेमेही, गो... गोष्ठेपण्डितः, गोष्ठेप्रगल्भः, कर्णेटिट्टिभः, कर्णेचुरचुरा। चकारोऽवधारणार्थः। समासान्तरं न भवति, परमपात्रेसंमिता इति॥

---

(१) अवयवग्रहणं किम्, 'उलूखलैराभरणैः पिशाची यदभाषत। एतत्तु ते दि... रात्रौ वृत्तं च द्रक्ष्यसि॥ इति पाठान्तरम्। अयमेवपाठः। न्यासपदमंजर्यो...

(२) "अवृत्करणादाकृतिगणोऽयम्" इति पाठान्तरम्। (३) उदुम्बरमशकाः।

## पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ ४९ ॥

सुप्सुपेति वर्त्तते, तस्य विशेषणमेतत्। पूर्वकाल एक सर्व जरत् पुराण नव केवल इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति। भिन्नप्रवृत्तिनिमित्तस्य(१) शब्दस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। पूर्वकाल इत्यर्थनिर्देशः, परिशिष्टानां स्वरूपग्रहणम्। (२)पूर्वकालोऽपरकालेन समस्यते। स्नातानुलिप्तः, कृष्टसमीकृतम्, दग्धप्ररूढम्, (३)एकशाटी, एकभिक्षा, सर्वदेवाः, सर्वमनुष्याः, जरद्धस्ती, जरद्गृष्टिः, जरद्वृत्तिः, पुराणान्नम्, पुराणावसथम्, नवान्नम्, नवावसथम्, केवलान्नम्। समानाधिकरणेनेति किम्? एकस्याः शाटी॥

## दिक्संख्ये संज्ञायाम् ॥ ५० ॥

समानाधिकरणेनेत्यापादसमाप्तेरनुवर्त्तते। दिग्वाचिनः शब्दाः संख्या च समानाधिकरणेन सुबन्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति, सञ्ज्ञायां विषये। पूर्वेषुकामशमी, अपरेषुकामशमी। संख्या पञ्चाम्राः, सप्तर्षयः। सञ्ज्ञायामिति किम्? उत्तरा वृक्षाः, पञ्च ब्राह्मणाः॥

## तद्धितार्थोत्तरपदसमाहारे च ॥ ५१ ॥

दिक्संख्ये इत्यनुवर्त्तते। तद्धितार्थे विषये (४) उत्तरपदे च परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति। तद्धितार्थे तावत्—पूर्वस्यां शालायां भवः, "दिक्पूर्वपदादसञ्ज्ञायां ञः", पौर्वशालः। आपरशालः। उत्तरपदे—पूर्वशालाप्रियः, अपरशालाप्रियः। समाहारे दिक्शब्दो न सम्भवति। संख्या, तद्धितार्थे—पाञ्चनापितिः, पञ्चकपालः। उत्तरपदे—पञ्चगवधनः, दशगवधनः। समाहारे—पञ्चफली, दशपूली। पञ्चकुमारि, दशकुमारि। ((५)"स नपुंसकम्" इति नपुंसकत्वं, "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वम्)॥

## संख्यापूर्वो द्विगुः ॥ ५२ ॥

"तद्धितार्थोत्तरपदसमाहारे च" इत्यत्र यः संख्यापूर्वः समासः स द्विगुसञ्ज्ञो भवति। तद्धितार्थे तावत्—पञ्चसु कपालेषु संस्कृतः, पञ्चकपालो। दशकपालः। "संस्कृतं भक्षा" इतीहाण्, तस्य "द्विगोर्लुगनपत्ये" इति लुक्। उत्तरपदे—पञ्चनावप्रियः। "नावो द्विगोः" इति समासान्तो भवति। समाहारे—पञ्चमूली। द्विगोरिति ङीप् भवति। द्विगुप्रदेशाः "द्विगोः" इत्येवमादयः॥

---

(१) "भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्ये"ति पाठः। (२) पूर्वकाल इति—पूर्वं कालोऽस्येति, पूर्वमनुष्ठित इत्यर्थः। अपरकालेन पश्चाद् अनुष्ठितेन। (३) एकशाटी। एकतद्धितेचेति ह्रस्वः। (४) 'तद्धितार्थे विषयभूत' इति पदमंजर्याम्। (५) कोष्ठान्तर्गतः पाठः प्रक्षिप्तो न्यासपदमंजर्योः संवादात्।

## कुत्सितानि कुत्सनैः ॥ ५३ ॥

कुत्सितवाचीनि सुबन्तानि कुत्सनवचनैः सुबन्तैः सह समस्यन्ते, तत्पु समासो भवति । (१)शब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते । "वि विशेष्येण" इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थं आरम्भः । वैयाक सूचिः । निष्प्रतिभ इत्यर्थः । याज्ञिककितवः, अयाज्ययाजनतृष्णापरः(२) । मीमां दुर्दुरूढः, नास्तिकः । कुत्सितानीति किम् ? वैयाकरणश्चौरः । न ह्यत्र वैयाक कुत्स्यते । कुत्सनैरिति किम् ? कुत्सितो ब्राह्मणः ॥

## पापाणके कुत्सितैः ॥ ५४ ॥

पापाणकशब्दौ कुत्सनाभिधायिनौ, तयोः पूर्वेण समासे परनिपातः प्राप्तः, पातार्थमिदमारभ्यते । पाप अणक एते सुबन्ते कुत्सितवचनैस्सह समस्येते, तत्पु समासो भवति । पापनापितः, पापकुलालः । अणकनापितः, अणककुलालः ॥

## उपमानानि सामान्यवचनैः ॥ ५५ ॥

उपमीयतेऽनेनेत्युपमानम् । उपमानवाचीनि सुबन्तानि सामान्यवचनैः सु सह समस्यन्ते, तत्पुरुषश्च समासो भवति । उपमानोपमेययोः साधारणो धर्मः न्यं, तद्विशिष्टोपमेयवचनैरयं समासः । शस्त्रीव श्यामा, शस्त्रीश्यामा देवदत्ता । श्येनी, हंसगद्गदा, न्यग्रोधपरिमण्डला । उपमानानीति किम् ? देवदत्ता श सामान्यवचनैरिति किम् ? फाला इव तन्दुलाः, पर्वता इव वलाहकाः ॥

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ ५६ ॥

उपमेयमुपमितं, तद्वाचि सुबन्तं व्याघ्रादिभिः सामर्थ्यादुपमानवचनैः सह स्यते, तत्पुरुषश्च समासो भवति, न चेत्सामान्यवाची शब्दः प्रयुज्यते । "वि विशेष्येण" इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थं आरम्भः । पुरुषोऽयं व्या इव, पुरुष व्याघ्रः । पुरुषसिंहः । सामान्याप्रयोग इति किम् ? पुरुषो व्याघ्र इव व्याघ्र । सिंह । ऋक्ष । ऋषभ । चन्दन । वृक्ष । वृष । वराह । हस्तिन् । कु रुरु । पृषत । पुण्डरीक । वलाहक । आकृतिगणश्चायम् । तेनेदमपि भवति । ब्रम् , मुखकमलम्, करकिसलयम् , पार्थिवचन्द्रः । इत्येवमादि ।

## विशेषणं विशेष्येण बहुलम् ॥ ५७ ॥

भेदकं विशेषणं, भेद्यं विशेष्यम् । विशेषणवाचि सुबन्तं विशेष्यवाचिना नाधिकरणेन सुबन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति । नी लम्, रक्तोत्पलम् । बहुलवचनं व्यवस्थार्थम् । क्वचिन्नित्यसमास एव । कृष्ण

---

(१) "शब्देत्यारभ्य इष्यत" इत्यंतः पाठो न्यासपदमंजर्यसम्मतः । न्यासेऽस्य स्वयमुक्तत्वात् । पदमंजर्यामव्याख्यातत्वाच्च । (२) "उच्यते" इति न्यासेऽधिकम् ।

लोहितशालिः। क्वचिन्न भवत्येव। रामो जामदग्न्यः, अर्जुनः कार्त्तवीर्यः। क्वचिद्वि-
कल्पः। नीलमुत्पलम्, नीलोत्पलम्। विशेषणमिति किम्? तक्षकः सर्पः। विशेष्ये-
ति किम्? लोहितस्तक्षकः॥

पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च॥ ५८॥

पूर्व, अपर, प्रथम, चरम, जघन्य, समान, मध्य, मध्यम, वीर इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूर्वपुरुषः, अपरपुरुषः, प्रथमपुरुषः, चरमपुरुषः, जघन्यपुरुषः, समानपुरुषः, मध्यपुरुषः, मध्यमपुरुषः, वीरपुरुषः। पूर्वस्यैवायं प्रपञ्चः॥

श्रेण्यादयः कृतादिभिः॥ ५९॥

श्रेण्यादयः सुबन्ताः कृतादिभिः समानाधिकरणैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। ॐश्रेण्यादिषु च्व्यर्थवचनम्ॐ। अश्रेणयः श्रेणयः कृताः, श्रेणिकृताः। एककृताः। श्रेण्यादयः पठ्यन्ते। कृतादिराकृतिगणः। च्व्यन्तानां तु "कुगतिप्रादयः" इत्यनेन नित्यसमासः। श्रेणीकृताः। श्रेणि। एक। पूग। कुण्ड। राशि। विशिख। निचय। निधान। इन्द्र। देव। मुण्ड। भूत। श्रवण। वदान्य। अध्यापक। ब्राह्मण। क्षत्रिय। पटु। पण्डित। कुशल। चपल। निपुण। कृपण। इति श्रेण्यादिः॥ कृत। मित। मत। भूत। उक्त। समाज्ञात। समाम्नात। समाख्यात। संभावित। अवधारित। निराकृत। अवकल्पित। उपकृत। उपाकृत। इति कृतादिः॥

क्तेन नञ्विशिष्टेनानञ्॥ ६०॥

नञैव विशेषो यस्य सर्वमन्यत् प्रकृत्यादिकं तुल्यं तन्नञ्विशिष्टं, तेन नञ्विशिष्टेन(१) क्तान्तेन समानाधिकरणेन सह अनञ् क्तान्तं समस्यते, तत्पुरुषश्च समासो भवति। कृतं च तदकृतं च, कृताकृतम्। भुक्ताभुक्तम्, पीतापीतम्, उदितानुदितम्। नुडिटौ तद्भक्तत्वान्नैव भेदकौ। अशितानशितेन जीवति, क्लिष्टाक्लिशितेन वर्त्तते। ॐकृतापकृतादीनामुपसंख्यानम्ॐ। कृतापकृतम्। भुक्तविभुक्तम्। पीतविपीतम्। गतप्रत्यागतम्, यातानुयातम्, क्रयाक्रयिका, पुटापुटिका, फलाफलिका, मानोन्मानिका। ॐसमानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्चॐ। शाकप्रधानः पार्थिवः(२), शाकपार्थिवः। कुतपसौश्रुतः, अजातौल्वलिः॥

सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः॥ ६१॥

सत् महत् परम उत्तम उत्कृष्ट इत्येते पूज्यमानैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूज्यमानैरिति वचनात् पूजावचनाः सदादयो विज्ञायन्ते। सत्पुरुषः, महा-

(१) विशिष्टेन—अधिकेन। भुक्तविभक्तम्—अत्र विशब्दोऽशोभनार्थो विरूपवत्। क्रयाक्रयिकाः—महान् क्रयः क्रय इत्युच्यते। अल्पक्रयः क्रयिका। समासे "अन्येषामपि दृश्यते" इति दीर्घः। (२) अत्र "पार्थव" इत्यपि पाठः पदमञ्जरीसम्मतः।

पुरुषः, परमपुरुषः, उत्तमपुरुषः, उत्कृष्टपुरुषः । पूज्यमानैरिति किम् ? उत्कृष्टो
कर्दमात् ॥

वृन्दारकनागकुञ्जरैः पूज्यमानम् ॥ ६२ ॥

वृन्दारक, नाग, कुञ्जर इत्येतैः सह पूज्यमानवाचि सुबन्तं समस्यते, त
समासो भवति । पूज्यमानमिति वचनाद् वृन्दारकादयः पूजावचना गृह्यन्ते
न्दारकः, अश्ववृन्दारकः । गोनागः, अश्वनागः । गोकुञ्जरः, अश्वकुञ्जरः ।
मिति किम् ? सुसीमो(२) नागः ॥

कतरकतमौ जातिपरिप्रश्ने ॥ ६३ ॥

कतरकतमौ जातिपरिप्रश्ने वर्त्तमानौ समर्थेन सुपा सह समस्येते, तत्पुरुष
सो भवति । कतरकठः, कतरकालापः, कतमकठः, कतमकालापः । ननु क
स्तावज्जातिपरिप्रश्न एव व्युत्पादितः, कतरशब्दोऽपि साहचर्यात्तदर्थवृत्तिरेव ग्र
किं जातिपरिप्रश्नग्रहणेन । एवं तर्ह्येतज्ज्ञापयति कतमशब्दोऽन्यत्रापि वर्त्त
तथा च प्रत्युदाहरणं–कतरो भवतोर्देवदत्तः, कतमो भवतां देवदत्तः ॥

किं क्षेपे ॥ ६४ ॥

किमित्येतत् क्षेपे गम्यमाने सुपा सह समस्यते, तत्पुरुषश्च समासो
किंराजा, यो न रक्षति । किंसखा, योऽभिद्रुह्यति । किंगौः, यो न वहति
क्षेपे" इति समासान्तो न भवति । क्षेप इति किम् ? को राजा पाटलिपुत्रे ॥

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्
पकधूर्तैर्जातिः ॥ ६५ ॥

उभयव्यञ्जना पोटेत्यभिधीयते । (३)गृष्टिरेकवारप्रसूता । धेनुः प्रत्यग्र
वशा वन्ध्या । वेहद् गर्भपातिनी । वष्कयणी तरुणवत्सा । पोटादिभिः सह जा
सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति । इभपोटा, इभयुवतिः, अग्नि
उदश्वित्कतिपयम् । गोगृष्टिः, गोधेनुः, गोवशा, गोवेहत्, गोवष्कयणी, क
कठश्रोत्रियः, कठाध्यापकः, कठधूर्त्तः । जातिरिति किम् ? देवदत्तः प्रवक्ता । ग्
मकुत्सार्थम् ॥

प्रशंसावचनैश्च ॥ ६६ ॥

जातिरिति वर्त्तते । जातिवाचि सुबन्तं प्रशंसावचनैः सह समस्यते, त
समासो भवति । रूढिशब्दाः प्रशंसावचना गृह्यन्ते मतल्लिकादयस्ते च आ
त्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादाना एव समानाधिकरणा भवन्ति ॥

---

(१) "उत्कृष्टे"ति स्त्रीलिंगपाठो न्यासे । (२) "सुषीम" इति प० म० । (३)
वयौवना स्त्री । स्तोकमल्पपर्यायः । कतिपयञ्च " इति पाठः ।

...म्, अश्वप्रकाण्डम्, गोमतल्लिका, अश्वमतल्लिका, गोमचर्चिका, अश्वमचर्चिका।
...तेरिति किम्? कुमारी मतल्लिका॥

युवा खलतिपलितवलिनजरतीभिः॥ ६७॥

खलत्यादिभिः समानाधिकरणैः सह युवशब्दः समस्यते, तत्पुरुषश्च समासो भव-
...। जरतीभिरिति(१) स्त्रीलिङ्गनिर्देशः, ॐप्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रह-
...ॐ इति ज्ञापनार्थः। युवा खलतिः, युवखलतिः। युवतिः खलती, युवखलती।
...पलितः, युवपलितः। युवतिः पलिता, युवपलिता। युवा वलिनः, युववलिनः।
...तिर्वलिना, युववलिना। युवा जरन्, युवजरन्। युवतिर्जरती, युवजरती॥

कृत्यतुल्याख्या अजात्या॥ ६८॥

कृत्यप्रत्ययान्तास्तुल्यपर्यायाश्च सुबन्ता अजातिवचनेन समस्यन्ते, तत्पुरुषश्च
...मासो भवति। भोज्योष्णम्, भोज्यलवणम्, पानीयशीतम्। तुल्याख्याः—तुल्यश्वेतः,
...यमहान्, सदृशश्वेतः, सदृशमहान्। अजात्येति किम्? भोज्य ओदनः॥

वर्णो वर्णेन॥ ६९॥

वर्णविशेषवाचि सुबन्तं वर्णविशेषवाचिना सुबन्तेन समानाधिकरणेन सह सम-
...ते, तत्पुरुषश्च समासो भवति। कृष्णसारङ्गः(२), लोहितसारङ्गः, कृष्णशवलः,
...हितशवलः। अवयवद्वारेण कृष्णशब्दः समुदाये वर्त्तमानः समानाधिकरणो भवति॥

कुमारः श्रमणादिभिः॥ ७०॥

कुमारशब्दः श्रमणादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। येऽत्र स्त्री-
...ङ्गाः पठ्यन्ते श्रमणा प्रव्रजिता कुलटेत्येवमादयस्तैः सह स्त्रीलिङ्ग एव कुमारशब्दः
...स्यते, ये तु पुंल्लिङ्गा अध्यापकोऽभिरूपकः पण्डित इति तैरुभयथा। प्रातिपदिक-
...णे लिङ्गविशिष्टस्यापि ग्रहणमिति। कुमारी श्रमणा, कुमारश्रमणा। श्रमणा।
...जिता। कुलटा। गर्भिणी। तापसी। दासी। बन्धकी। अध्यापक। अभिरूपक।
...ण्डित। पटु। मृदु। कुशल। चपल। निपुण॥

चतुष्पादो गर्भिण्या॥ ७१॥

चतुष्पाद्वाचिनः सुबन्ता गर्भिणीशब्देन समस्यन्ते, तत्पुरुषश्च समासो भवति।
...गर्भिणी, अजागर्भिणी। ॐचतुष्पाज्जातिरिति वक्तव्यम्ॐ। इह मा भूत्—कालाक्षी
...गर्भिणी, स्वस्तिमती गर्भिणी। चतुष्पाद इति किम्? ब्राह्मणी गर्भिणी॥

मयूरव्यंसकादयश्च॥ ७२॥

समुदाया एव निपात्यन्ते। मयूरव्यंसकादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति। चका-
...वधारणार्थः, परममयूरव्यंसक इति समासान्तरं न भवति। मयूरव्यंसकः, छात्र-

(१) "स्त्रीलिङ्गेन" इति न्यासे। (२) नानावर्णसमाहारः सारङ्गः।

७ का०

त्र्यंसकः। काम्बोजमुण्डः, यवनमुण्डः। छन्दसि—हस्तेगृह्य, पादेगृह्य, ला
पुनर्दाय। एहीडादयोऽन्यपदार्थे॥ एहीडम्, एहियवं वर्त्तते। एहिवाणिजासो
अपेहिवाणिजा। प्रेहिवाणिजा। एहिस्वागता। अपेहिस्वागता। प्रेहिस्वागता तकी
द्वितीया। अपेहिद्वितीया। प्रोहकटा। अपोहकटा। प्रोहकर्दमा। अपोहकर्दमा गोर्द्वेव
चूडा। आहरचेला। आहरवसना। आहरवनिता। कृन्तविचक्षणा। उद्धरपली
उद्धमविधमा। उत्पचविपचा। उत्पतनिपता। उच्चावचम्। उच्चनीचम्।
चितम्। अवचितपराचितम्। निश्चप्रचम्। अकिंचनम्। स्नात्वाकालकः। एक
स्थिरकः। भुक्त्वासुहितः। प्रोष्यपापीयान्। उत्पत्यव्याकुला। निपत्यरोहिणी तृणात
णश्यामा। अपेहिप्रघसा। इहपञ्चमी। इहद्वितीया॥ जहि कर्म्मणा बहुलमाभीक्ष्ण्ये
कर्त्तारं चाभिदधाति॥ जहिजोडः। उज्जहिजोडः। जहिस्तम्बः। उज्जहिस्तम्बः,
आख्यातमाख्यातेन क्रियासातत्ये॥ अश्नीतपिबता। पचतभृज्जता। खादतमोदता
खादताचमता। आहरनिवपा। आवपनिष्किरा। उत्पचविपचा। भिन्द्धि लवणा
छिन्द्धिविचक्षणा। पचलवणा। पचप्रकूटा। अविहितलक्षणस्तत्पुरुषो मयूरव्यंसका
दिषु द्रष्टव्यः॥

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य प्रथमः पादः।

## अथ द्वितीयाध्यायस्य द्वितीयः पादः॥

### पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे॥१॥

एकदेशोऽस्यास्तीत्येकदेशी अवयवी, तद्वाचिना सुबन्तेन सह पूर्वापरा
शब्दाः सामर्थ्यादेकदेशवचनाः समस्यन्ते, तत्पुरुषश्च समासो भवति। एका
ग्रहणमेकदेशिनो विशेषणम्, एकं(१)चेदधिकरणमेकद्रव्यमेकदेशि भवति। समासो
सापवादोऽयं योगः। पूर्वं कायस्य, पूर्वकायः। अपरकायः, अधरकायः, उत्त
एकदेशिनेति किम्? पूर्वं नाभेः कायस्य(२)। एकाधिकरण इति किम्
छात्राणामामन्त्रय(३)। कथं मध्याह्नः, सायाह्न इति। "संख्याविसायपूर्वस्य
इति ज्ञापकात्सर्वेणैकदेशशब्देनाह्नः समासो भवति॥

### अर्द्धं नपुंसकम्॥२॥

एकदेशिनैकाधिकरणे इति वर्त्तते। समप्रविभागेऽर्धशब्दो नपुंसकमा
स्तस्येदं ग्रहणम्। अर्द्धमित्येतद् नपुंसकमेकदेशिनैकाधिकरणेन समस्यते, एकदे

(१) एकश्चेत् एकत्वसंख्याविशिष्टमित्यर्थः। (२) "पूर्वं नाभेरिति"—का
नाभ्यपेक्षया पूर्वोभाग इत्यर्थः॥ नाभिशब्देन सह समासो न भवतीति कुत्रचि
(३) "पूर्वं छात्राणां आमन्त्रयस्व" इति न्यासे।

मासो भवति । षष्ठीसमासाऽपवादोयं योगः। अर्द्धं पिप्पल्याः, अर्द्धपिप्पली। अर्द्धको-तकी । नपुंसकमिति किम् ? ग्रामार्द्धः (१), नगरार्द्धः । एकदेशिनेत्येव । अर्द्धं(२) गोर्देवदत्तस्य । देवदत्तेन सह समासो न भवति । एकाधिकरण इत्येव । अर्द्धं पिप्पलीनाम् ॥

## द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥ ३ ॥

एकदेशिनैकाधिकरण इति वर्तते । षष्ठीसमासापवादोऽयं योगः । अन्यतरस्यां-ग्रहणात् सोऽपि(३) भवति।"पूरण" इति प्रतिषेधश्चात एवान्यतरस्यांग्रहणसामर्थ्याद्ध वर्त्तते । द्वितीयादीनि शब्दरूपाणि एकदेशिनैकाधिकरणेन सहान्यतरस्याम् सम-स्यन्ते, तत्पुरुषश्च समासो भवति । द्वितीयं भिक्षायाः द्वितीयभिक्षा । षष्ठीसमासपक्षे-क्षाद्वितीयं वा । तृतीयं भिक्षायाः, तृतीयभिक्षा । भिक्षातृतीयं वा । चतुर्थं भिक्षायाः, चतुर्थभिक्षा । भिक्षाचतुर्थं वा । तुर्यं भिक्षायाः, तुर्यभिक्षा । भिक्षातुर्यं वा ॥ तुरीय-शब्दस्यापीष्यते । तुरीयं भिक्षायाः, तुरीयभिक्षा । भिक्षातुरीयं वा(४) । एकदेशिने-व । द्वितीयं भिक्षाया भिक्षुकस्य । एकाधिकरण इत्येव । द्वितीयं भिक्षाणाम् ॥

## प्राप्तापन्ने च द्वितीयया ॥ ४ ॥

एकदेशिनैकाधिकरण इति निवृत्तम्। द्वितीयासमासे प्राप्ते वचनमिदम् । विधान-सामर्थ्यात्सोपि भवति । प्राप्त आपन्न इत्येतौ द्वितीयान्तेन सह समस्येते, तत्पुरुषश्च समासो भवति । प्राप्तो जीविकां, प्राप्तजीविकः । जीविकाप्राप्त इति वा । आपन्नो जीवि-काम् , आपन्नजीविकः । जीविकापन्न इति वा ॥

## कालाः परिमाणिना ॥ ५ ॥

परिमाणमस्यास्तीति परिमाणी तद्वाचिना सुबन्तेन सह सामर्थ्यात्परिमाणवचनाः कालशब्दाः समस्यन्ते, तत्पुरुषश्च समासो भवति । षष्ठीसमासविषये योगारम्भः(५)। मासो जातस्य, मासजातः । संवत्सरजातः, द्व्यहजातः, त्र्यहजातः ॥

## नञ् ॥ ६ ॥

नञ् समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । न ब्राह्मणः, अब्राह्मणः । अवृषलः । ॐनञो नलोपस्तिङि क्षेपेॐ । अपचसि त्वं जाल्म(६) ॥

## ईषदकृता ॥ ७ ॥

ईषदित्ययं शब्दोऽकृदन्तेन सुपा सह समस्यते, तत्पुरुषश्च समासो भवति ।

---

(१) ग्रामार्द्धः ग्रामस्यैकदेश इत्यर्थः । (२) अर्द्धं पशो रित्यादि—देवदत्तोऽत्र स्वामी ते, नैकदेशी ॥ (३) "षष्ठी समास" इत्यधिकं न्यासे । (४) प्रायः सर्वत्र तुरीयशब्दादिः भिक्षातुरीयं वेत्यन्तः पाठो नास्ति । (५) 'षष्ठीसमासापवादोऽयं योगः' इति पाठःक्वचित् । (६) प्रायः सर्वत्र नञो नलोपेत्यतः जाल्मपर्यन्तः पाठो नास्ति, न्यासपदमंजर्योरपि व्याख्या न दृश्यते ।

॥ईषद्गुणवचनेनेति वक्तव्यम्॥। ईषत्कडारः, ईषत्पिङ्गलः, ईषद्विकटः, ईषत्पीतम्, ईषद्रक्तम्। (१)गुणवचनेनेति किम्? इह न भवति। ईषद्गा

## षष्ठी ॥ ८ ॥

षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह समस्यते। तत्पुरुषश्च समासो राज्ञः पुरुषो राजपुरुषः। ब्राह्मणकम्बलः। ॥कृद्योगा(३) च षष्ठी समस्यत व्यम्॥। इध्मप्रव्रश्चनः। पलाशशातनः। किमर्थमिदमुच्यते ॥प्रतिपदविधा समस्यते॥ इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः(४)॥

## याजकादिभिश्च ॥ ९ ॥

पूर्वेण समासः सिद्ध एव, तस्य "कर्तरि च" इति प्रतिषेधे प्राप्ते वच भ्यते(५) प्रतिप्रसवार्थम्। याजकादिभिः सह षष्ठी समस्यते, तत्पुरुषश्च समा ब्राह्मणयाजकः। क्षत्रिययाजकः। याजक। पूजक। परिचारक। परिषेचक( तर्क। अध्यापक। उत्सादक। उद्वर्तक। (७)होतृ। पोतृ। भर्तृ। रथगणक णक। ॥तत्स्थैश्च(८) गुणैः षष्ठी समस्यत इति वक्तव्यम्॥। चन्दनगन्धः। क ॥गुणात्तरेण तरलोपश्चेति वक्तव्यम्॥। सर्वेषां श्वेततरः, सर्वश्वेतः। सर्वेषां सर्वमहान्। "न निर्धारणे" इति प्रतिषेधे प्राप्ते वचनमिदम्। सर्वशुक्ला

## न निर्द्धारणे ॥ १० ॥

पूर्वेण समासे प्राप्ते प्रतिषेध आरभ्यते। निर्द्धारणे या षष्ठी सा न समस् तिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणम्। क्षत्रियो मनुष् तमः। कृष्णा(१०)गवां सम्पन्नक्षीरतमा। धावन्नध्वगानां शीघ्रतमः। ॥प्रतिप धाना च षष्ठी न समस्यत इति वक्तव्यम्॥। सर्पिषो ज्ञानम्। मधुनो ज्ञान

---

(१) "अकृतेति किम्, ईषद्भुक्तम्" इत्यधिकं क्वचित्। (२) ईषद्गापाल शब्दोऽयं जातिवचनो न गुणवचनः। (३) कर्तृकर्मणोः कृतीति कृच्छब्दोन विहिता सा कृद्योगा। (४) अपकर्षः अपवादः। (५) प्रतिप्रसव इति-अन्ते तस्य पुनः प्रवृत्त्यभ्यनुज्ञानं प्रतिप्रसवः। (६) क्वचित् "परिवेषक" इति (७) "हर्तृ, वर्तक," इत्यधिकं क्वचित्। (८) तत्स्थैरिति-तच्छब्देन सन्निधानतः परामृश्यन्ते। तस्मिन्नात्मनि ये गुणाः स्थितास्तैः। (९) प्रायः सर्वत्र त्यादिः सर्वशुक्लागौरित्यन्तः पाठो नास्ति, न्यासपदमंजर्योरपि न व्याख्या (१०) 'कृष्णा गवामिति'—नात्रायमर्थः गवां मध्ये या कृष्णा सा सम्पन्नक्षीरतमे कृष्णाशब्दस्य गवामित्यनेन सम्बन्धः, न च तस्य समासप्रसङ्गः, गुणेन नेति तस्माद्गवां मध्ये या सम्पन्नक्षीरतमा सा कृष्णेत्ययमत्रार्थः इति (११) "प्रतिपदेति"—"षष्ठी शेषे" इति सामान्यविहितां षष्ठीं मुक्त्वा विशेषविहि षष्ठी प्रतिपदविधाना॥ (१२) कुत्र चिदधिकः पाठः। "ज्ञोविदर्थस्य करण इ

पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥ ११ ॥

पूरणगुणसुहितार्थ, सद्, अव्यय, तव्य, समानाधिकरण, इत्येतैः सह षष्ठी न समस्यते। अर्थशब्दः प्रत्येकमभिसम्बध्यते, तेन स्वरूपविधिर्न भवति। पूरणार्थ—छात्राणां पञ्चमः, छात्राणां दशमः। गुण—बलाकायाः शौक्ल्यम्, काकस्य कार्ष्ण्यम्। सुहितार्थास्तृप्त्यर्थाः—फलानां सुहितः, फलानां तृप्तः। सत्—ब्राह्मणस्य (१)कुर्वन्, ब्राह्मणस्य कुर्वाणः। अव्यय—ब्राह्मणस्य कृत्वा, ब्राह्मणस्य हृत्वा। तव्य—ब्राह्मणस्य कर्तव्यम्। तव्यता सानुबन्धकेन समासो भवत्येव। ब्राह्मणकर्त्तव्यम्। समानाधिकरण—शुकस्य माराविदस्य(२), राज्ञः पाटलिपुत्रकस्य, पाणिनेः सूत्रकारस्य। किं च स्यात्, पूर्वनिपातस्यानियमः स्यात्। अनन्तरायां तु प्राप्तौ प्रतिषिद्धायां "विशेषणं विशेष्येण" इति भवत्येव समासः। पूर्वनिपातश्च तदा नियोगतो विशेषणस्यैव(३)॥

क्तेन च पूजायाम् ॥ १२ ॥

"मतिबुद्धिपूजार्थेभ्यश्च" इति वक्ष्यति, तस्येदं ग्रहणम्। पूजाग्रहणमुपलक्षणार्थम्। यः पूजायां विहितस्तेन षष्ठी न समस्यते। राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः। पूजायामिति किम्(४)? छात्रस्य हसितं, छात्रहसितम्॥

अधिकरणवाचिना च ॥ १३ ॥

"क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः" इति वक्ष्यति, तस्येदं ग्रहणम्। अधिकरणवाचिना क्तेन षष्ठी न समस्यते। इदमेषां यातम्(५), इदमेषां भुक्तम्॥

कर्म्मणि च ॥ १४ ॥

क्तेनेति निवृत्तम्। कर्म्मग्रहणं षष्ठीविशेषणम्। कर्म्मणि च या षष्ठी सा न समस्यते। "उभयप्राप्तौ कर्म्मणि" इति षष्ठ्या इदं ग्रहणम्। आश्चर्यो गवां दोहोऽशिक्षितपालकेन(६)। रोचते ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं देवदत्तेन। विचित्रा सूत्रस्य कृतिः पाणिनिना॥

तृजकाभ्यां कर्तरि ॥ १५ ॥

कर्तृग्रहणं षष्ठीविशेषणम्। कर्त्तरि या षष्ठी सा तृचाऽकेन च सह न समस्यते। भवतः शायिका, भवत आसिका, भवतोऽग्रगामिका। तृच् कर्त्तर्येव विधीयते,

(१) ब्राह्मणस्य कुर्वन्—अत्र कुर्वन् शब्दः किंकरपर्यायः॥ (२) "माराविदस्य"—मारं विदतीति ददातीति माराविदः। संज्ञैषा शुकविशेषस्य॥ (३) प्रायः सर्वत्र अनन्तरायामित्यादितः विशेषणस्यैवेति पर्यन्तः पाठो नास्ति। (४) "पूजायामित्यारभ्य" हसितमित्यन्तः पाठो न्यासे स्वयमुक्तत्वात्पदमंजर्य्याम् व्याख्यातत्वाच्च मूले प्रक्षिप्तः प्रतिभाति॥ (५) न्यासे तु "इदमेषामासितम्" इत्युदाहरणं—व्याख्यातम् दृश्यते॥ (६) क्वचित्पाठः "अशिक्षितेन गोपालकेन" इति।

तत्प्रयोगे कर्त्तरि षष्ठी नास्ति । तस्मात्तृजूग्रहणमुत्तरार्थम् । कर्त्तरीति किम्
त्विकां मे (१)धारयसि ।

## कर्त्तरि च ॥ १६ ॥

भवतः शायिका ।

कर्त्तरि च यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते । सामर्थ्यादकस्य
कर्तृग्रहणमितरत्र व्यभिचाराभावात् । अपां स्रष्टा, पुरां भेत्ता, वज्रस्य भर्त्ता
भर्तृशब्दो ह्ययं याजकादिषु पठ्यते(२) । सम्बन्धिशब्दस्य पतिपर्यायस्य
म्(३) । अकः खल्वपि । ओदनस्य भोजकः, सक्तूनां पायकः ॥

## नित्यं क्रीडाजीविकयोः ॥ १७ ॥

नेति निवृत्तं, न तृजकौ । नित्यं समासो विधीयते, क्रीडायां जीविकायां
षष्ठी समस्यते, तत्पुरुषश्च समासो भवति । तृच्क्रीडाजीविकयोर्नास्तीत्य
ह्रियते । उद्दालकपुष्पभञ्जिका, वारणपुष्पप्रचायिका । जीविकायाम्-दन्त
नखलेखकः । क्रीडाजीविकयोरिति किम् ? ओदनस्य भोजकः ॥

## कुगतिप्रादयः ॥ १८ ॥

नित्यमिति वर्त्तते । कुशब्दोऽव्ययं गृह्यते गत्यादिसाहचर्यात्, न
कुगतिप्रादयः समर्थेन शब्दान्तरेण सह नित्यं समस्यन्ते, तत्पुरुषश्च समासो
कुः पापार्थे–कुपुरुषः । गति–उररीकृतम्, यदूरीकरोति । प्रादयः-दुर्नि
दुष्पुरुषः । स्वती पूजायाम्–सुपुरुषः, अतिपुरुषः । आङीषदर्थे—आपिङ्गलः
चैतदुपाधिवचनम्, अन्यत्रापि हि समासो दृश्यते । कोष्णम्, कदुष्ण
ष्णम् । दुष्कृतम् । सुष्टुतम्, अतिस्तुतम् । आबद्धम्(४) इति । *प्रादयो
प्रथमया* प्रगत आचार्यः, प्राचार्यः । प्रान्तेवासी । *अत्यादयः
द्वितीयया* अतिक्रान्तः खट्वाम्, अतिखट्वः । अतिमालः । *अवादयः
तृतीयया* अवक्रुष्टः कोकिलया, अवकोकिलः । *पर्यादयो ग्लानाद्यर्थे
परिग्लानोऽध्ययनाय, पर्यध्ययनः । अलं कुमार्यै, अलंकुमारिः । *निरादयः
पञ्चम्या* निष्क्रान्तः कौशाम्ब्याः, निष्कौशाम्बिः । निर्वाराणसिः । *इवे
समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्* वाससी इव ।
सङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः* वृक्षं प्रति विद्योतते विद्युत्, सा
मातरं प्रति ॥

---

(१) "इक्षुभक्षिकां मे इति"—कर्मणि षष्ठ्या समासः, "मे" इति धारे
सम्प्रदाने चतुर्थी, न्यासकारस्त्वत्र कर्त्तरि षष्ठीमाह ॥ (२) "तत्र पाठसामर्थ्यात्समा
तव्यम् । नैतदस्ति" इत्यधिकं क्वचित् । (३) "इह तु क्रियाशब्दस्य" इति
(४) "आविद्धम्" इति न्यासे ।

## उपपदमतिङ् ॥ १९ ॥

नित्यमिति वर्त्तते । उपपदमतिङन्तं समर्थेन शब्दान्तरेण सह समस्यते नित्यं, तत्पुरुषश्च समासो भवति । कुम्भकारः, नगरकारः । अतिङिति किम् ? एधानाहारको याति । ननु च "सुप् सुपा" इति वर्त्तते, तत्र कुतस्तिङन्तेन सह समासप्रसङ्गः । तर्हि ज्ञापयति एतयोर्योगयोः सुप् सुपेति न सम्बध्यत इति । तेन 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इत्येतदुपपन्नं भवति । अश्वक्रीती, क्रीती ॥

## अमैवाव्ययेन ॥ २० ॥

पूर्वेणैव समासे सिद्धे नियमार्थं वचनम् । अव्ययेनोपपदस्य यः समासः सोऽमैव भवति नान्येन । स्वादुङ्कारं भुङ्क्ते, सम्पन्नङ्कारं भुङ्क्ते, लवणङ्कारं भुङ्क्ते । अमैवेति किम् ? "कालसमयवेलासु तुमुन्" । कालो भोक्तुम्(१) । एवकारकरणमु... विशेषणार्थम् । अमैव(२) यत्तुल्यविधानमुपपदं तस्य समासो यथा स्यात्, अमा चान्येन च तुल्यविधानं तस्य मा भूत् । अग्रे भुक्त्वा, अग्रे भोजम् ॥

## तृतीयाप्रभृतीन्यन्यतरस्याम् ॥ २१ ॥

अमैवेत्यनुवर्त्तते । "उपदंशस्तृतीयायाम्" इत्यतः प्रभृति यान्युपपदानि तान्यमैवाव्ययेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति । उभयत्र विभाषेयम् । यदमैव तुल्यविधानमुपपदं तस्य प्राप्ते, यथा "उपदंशस्तृतीयायाम्" इति । यदमा चान्येन च तुल्यविधानं तस्याप्राप्ते, यथा "अव्यये यथाभिप्रेताख्याने कृञः क्त्वाणमुलौ" इति । मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं भुङ्क्ते, उच्चैः कारमाचष्टे, उच्चैः(३)कारम् । अमैवेत्येव । "पर्याप्तिवचनेष्वलमर्थेषु" पर्याप्तो भोक्तुम्, प्रभुर्भोक्तुम् ॥

## क्त्वा च ॥ २२ ॥

अमैवेति पूर्वयोगेऽनुवृत्तं, तेनान्यत्र न प्राप्नोतीति वचनमारभ्यते । क्त्वाप्रत्ययेन तृतीयाप्रभृतीन्युपपदानि अन्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति । उच्चैःकृत्य । उच्चैः कृत्वा । "अव्यये यथाभिप्रेताख्याने" इति क्त्वाप्रत्ययः । समासस्यवेव । तृतीयाप्रभृतीनीत्येव । अलं कृत्वा । खलु कृत्वा ॥

## शेषो बहुव्रीहिः ॥ २३ ॥

---

(१) क्वचिदयमधिकः पाठः—"समयो भोक्तुम् । वेला भोक्तुम्" इति । (२) "तुल्यविधानमिति"—येन वाक्येनामेव प्रत्ययो विधीयते न तु प्रत्ययान्तरं तेन यदुपपदं निर्दिश्यते तदमैव तुल्यविधानम् ॥ (३) "उच्चैःकारमिति"—यदा समासस्तदा कृदुत्तरपदप्रकृतिस्वरः, वर्णमुल्यन्यतरस्यामित्याद्युदात्तत्वं, यदा तु न समासस्तदोच्चैरित्यन्तोदात्तं, स्वरादिषु तथा पाठात् । कारकमित्याद्युदात्तम् । इति पदमंजर्यां स्पष्टम् ॥

(१) उपयुक्तादन्यः शेषः। शेषः समासो बहुव्रीहिसंज्ञो भवति। यत्रान्यः समासो नोक्तः। वक्ष्यति "अनेकमन्यपदार्थे"। चित्रगुः, शबलगुः ... त्तरासङ्गः। शेष इति किम्? उन्मत्तगङ्गम्, लोहितगङ्गम्। बहुव्रीहिप्रदेशाः ... व्रीहौ" इत्येवमादयः॥

अनेकमन्यपदार्थे ॥ २४ ॥

अनेकं सुबन्तमन्यपदार्थे वर्तमानं(२)समस्यते, बहुव्रीहिश्च समासो भवति। ... मार्थमेकं वर्जयित्वा सर्वेषु विभक्त्यर्थेषु बहुव्रीहिर्भवति। प्राप्तमुदकं यं ... दको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। ... दत्तः। वीरपुरुषको ग्रामः। प्रथमार्थे तु न भवति। वृष्टे देवे गतः। अनेक ... बहूनामपि यथा स्यात्।

सुसूक्ष्मजटकेशेन सुल(३)भाजिनवाससा।
पुत्री पर्वतराजस्य कुतो हेतोर्विवाहिता (४)॥

ॐबहुव्रीहिः समानाधिकरणानामिति वक्तव्यम्ॐ। व्यधिकरणानां ... पञ्चभिर्भुक्तमस्य। ॐअव्ययानां च (५)बहुव्रीहिर्वक्तव्यःॐ। उच्चैर्मुखः, ... ॐसप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यःॐ। कण्ठे स्थितः(६) कालो ... कालः। उरसिलोमा। उष्ट्रस्य मुखमिव मुखं यस्य स, उष्ट्रमुखः। खरमुखः ... दायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्चेति वक्तव्यम्ॐ। केशानां सङ्घातः ... ङ्घातः, केशसङ्घातश्चूडाऽस्य केशचूडः। सुवर्णस्य विकारोऽलङ्कारोऽस्य ... ङ्कारः। ॐप्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यःॐ। प्र... मस्य प्रपर्णः, प्रपतितपर्णः। प्रपतितं पलाशमस्य प्रपलाशः, प्रपतितपलाशः ... ऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च वक्तव्यःॐ। अविद्यमानः ... अपुत्रः, अविद्यमानपुत्रः। अभार्यः, अविद्यमानभार्यः। ॐसुबधिकारेऽस्ति... बहुव्रीहि र्वक्तव्यःॐ। अस्तिक्षीरा ब्राह्मणी। अस्त्यादयो निपाताः॥

संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये ॥ २५ ॥

संख्येये या संख्या वर्त्तते तया सहाव्ययासन्नादूराधिकसंख्याः समस्यन्ते ... हिश्च समासो भवति। अव्यय—उपदशाः। उपविंशाः। आसन्नदशाः। आस... अदूरदशाः। अदूरविंशाः। अधिकदशाः। अधिकविंशाः। संख्या—द्वि...

---

(१) तत्पुरुष इति निवृत्तमिति क्वचिदधिकः पाठः। "उपयुक्तात् योन्यः श... न्यासीयः पाठः। (२) "सह" इति अधिकं पद०। (३) "सुलभेत्यत्र" ... पदमंजर्य्याम्। (४) क्वचिदीदृशः पाठो दृश्यते, सचायम्—सुसूक्ष्मजटकेश... नवाससा। समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति॥ इति। (५) "बहु... इति पाठो न्यासे नास्ति। (६) अत्र "स्थ" इति पदमंजर्य्याम्।

पुराः । द्विदशाः । संख्येति किम् ? पञ्च ब्राह्मणाः । अव्ययासन्नादूराधिकसंख्या इति किम् ? ब्राह्मणाः पञ्च । संख्येये इति किम् ? अधिका विंशतिर्गवाम् ॥

दिङ्नामान्यन्तराले ॥ २६ ॥

दिशां नामानि दिङ्नामानि । दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते, बहुव्रीहिश्च समासो भवति । दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं दक्षिणपूर्वा दिक् । पूर्वोत्तरा । उत्तरपश्चिमा । पश्चिमदक्षिणा । ॐसर्वनाम्नो वृत्तिमात्रे(१) पुंवद्भावः॥ । नामग्रहणं रूढ्यर्थम् । इह मा भूत् । ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यदन्तरालमिति ।

तत्र तेनेदमिति सरूपे ॥ २७ ॥

तत्रेति सप्तम्यन्तं गृह्यते, तेनेति तृतीयान्तम् । सरूपग्रहणं प्रत्येकमभिसम्बद्ध्यते। तत्रेति सप्तम्यन्ते सरूपे पदे तेनेति च तृतीयान्ते इदमित्येतस्मिन्नर्थे समस्येते, बहुव्रीहिश्च समासो भवति । इतिकरणश्चेह विवक्षार्थो लौकिकमर्थमनुसारयति । ततो ग्रहणं प्रहरणं कर्मव्यतिहारो युद्धं च समासार्थ इति सर्वमितिकरणाल्लभ्यते । यत्तत्रेति निर्दिष्टं ग्रहणं चेत्तद्भवति, यत्तेनेति निर्दिष्टं प्रहरणं चेत्तद्भवति, यदिदमिति निर्दिष्टं युद्धं चेत्तद्भवति । केशेषु केशेषु च गृहीत्वा इदं युद्धं वृत्तं, केशाकेशि । कचाकचि । दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं वृत्तं, दण्डादण्डि । मुशलामुशलि । "इच् कर्मव्यतिहार" इति इच् समासान्तः, स चाव्ययम् । "अन्येषामपि दृश्यते" इति पूर्वपदस्य दीर्घत्वम् । सरूपग्रहणं किम् ? हलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तम् ॥

तेन सहेति तुल्ययोगे ॥ २८ ॥

सहेत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं तेनेति तृतीयान्तेन सह समस्यते, बहुव्रीहिश्च समासो भवति । सह(२) पुत्रेणागतः, सपुत्रः । सच्छात्रः । सकर्मकरः । तुल्ययोग इति किम् ? सहैव दशभिः पुत्रैर्भारं वहति गर्दभी । विद्यमानैरेव दशभिः पुत्रैर्भारं वहतीत्यर्थः । कथं सकर्मकः, सलोमकः, सपक्षक इति । नह्यत्र तुल्ययोगो गम्यते, किं तर्हि विद्यमानता । प्रायिकं तुल्ययोग इति विशेषणम्, अन्यत्रापि समासो दृश्यते ॥

चार्थे द्वन्द्वः ॥ २९ ॥

अनेकमिति वर्तते । अनेकं सुबन्तं चार्थे वर्त्तमानं समस्यते, द्वन्द्वसंज्ञश्च समासो भवति । (३)समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्र समुच्चयान्वाचययोर-

---

(१) वृत्तिमात्रे इत्यस्याग्रे पूर्वपदस्येत्यपि क्वचित्पाठः । (२) "सह पुत्रेणागतः" इति विग्रहो न्यासस्वरसात् मूले नासीदित्यनुमीयते । (३) यदा परस्परनिरपेक्षाः पदार्थाः एकस्मिन्प्रतिसम्बन्धिनि समुच्चीयन्ते तदा "समुच्चयः" ॥ यदैकस्य प्राधान्यात्तदनुरोधेन त्वितरदन्वाचीयते "तदान्वाचयः" । परस्परापेक्षाणामवयवभेदानुगत "इतरेतरयोगः" ॥ परस्पराणामेव तिरोहितावयवभेदः संहतिप्रधानः "समाहारः" ॥

